॥ श्रीरेणुका अष्टोत्तरशतनामस्तोत्रम् ॥

॥ श्री गणेशाय नमः ॥

॥ श्री भगवत्यै रेणुकाजगदम्बायै नमोनमः ॥

ॐ अस्य श्री रेणुका देव्यष्टोत्तरशत नामावलिस्तोत्रमहामन्त्रस्य
शाण्डिल्य महर्षिः अनुष्टुप् छन्दः श्रीजगदम्बा रेणुका देवता
ॐ बीजं नमः शक्तिः ॐ महादेवीति कीलकं
श्री जगदम्बा रेणुका प्रसादसिद्ध्यर्थं
सर्वं पापक्षय द्वारा श्रीजगदम्बारेणुकाप्रीत्यर्थं
सर्वाभीष्ट फल प्राप्त्यर्थं च जपे विनियोगः ।

अथ करन्यासः
ॐ ह्रां रेणुकायै नमः अङ्गुष्ठाभ्यां नमः ।
ॐ ह्रीं राममात्रे नमः तर्जनीभ्यां नमः ।
ॐ ह्रूं महापुरुषवासिन्यै नमः मध्यमाभ्यां नमः ।
ॐ ह्रैं एकवीरायै नमः अनामिकाभ्यां नमः ।
ॐ ह्रौं कालरात्र्यै नमः कनिष्ठिकाभ्यां नमः ।
ॐ ह्रः एककाल्यै नमः करतलकरपृष्ठाभ्यां नमः ।

अथ षडङ्गन्यासः
ॐ ह्रां रेणुकायै नमः हृदयाय नमः ।
ॐ ह्रीं राममात्रे नमः शिरसे स्वाहा ।
ॐ ह्रूं महापुरुषवासिन्यै नमः शिखायै वषट् ।
ॐ ह्रैं एकवीरायै नमः कवचाय हुं ।
ॐ ह्रौं कालरात्र्यै नमः नेत्रत्रयाय वौषट् ।
ॐ ह्रः एककाल्यै नमः अस्त्राय फट् ।

अथ देहन्यासः
ॐ ह्रां रेणुकायै नमः शिरसे स्वाहा ।
ॐ ह्रीं राममात्रे नमः मुखे ।
ॐ ह्रूं महापुरुषवासिन्यै नमः हृदये ।
ॐ ह्रैं एकवीरायै नमः गुह्ये ।
ॐ ह्रौं कालरात्र्यै नमः पादयोः ।
ॐ ह्रः एककाल्यै नमः सर्वाङ्गे ।

ॐ भूर्भुवः स्वः इति दिग्बन्धः ।

ध्यानम्

ध्यायेन्नित्यमपूर्ववेशललितां कन्दर्प लावण्यदां
देवीं देवगणैरुपास्यचरणां कारुण्यरत्नाकराम् ॥

लीलाविग्रहणीं विराजितभुजां सच्चन्द्रहासादिभिर्-
भक्तानन्दविधायिनीं प्रमुदितां नित्योत्सवां रेणुकाम् ॥

ॐ

जगदम्बा जगद्वन्द्या महाशक्तिर्महेश्वरी ।
महादेवी महाकाली महालक्ष्मीः सरस्वती ॥

महावीरा महारात्रिः कालरात्रिश्च कालिका ।
सिद्धविद्या राममाता शिवा शान्ता ऋषिप्रिया ॥

नारायणी जगन्माता जगद्बीजा जगत्प्रभा ।
चन्द्रिका चन्द्रचूडा च चन्द्रायुधधराशुभा ॥

भ्रमराम्बा तथानन्दा रेणुका मृत्युनाशिनी ।
दुर्गमा दुर्लभा गौरी दुर्गा भर्गकुटुम्बिनी ॥

कात्यायनी महामाता रुद्राणी चाम्बिका सती ।
कल्पवृक्षा कामधेनुः चिन्तामणिरूपधारिणी ॥

सिद्धाचलवासिनी च सिद्धवृन्दसुशोभिनी ।
ज्वालामुखी ज्वलत्कान्ता ज्वालाप्रज्वलरूपिणी ॥

अजा पिनाकिनी भद्रा विजया विजयोत्सवा ।
कुष्ठरोगहरा दीप्ता दुष्टासुरगर्वमर्दिनी ॥

सिद्धिदा बुद्धिदा शुद्धा नित्यानित्यतपःप्रिया ।
निराधारा निराकारा निर्माया च शुभप्रदा ॥

अपर्णा चान्नपूर्णा च पूर्णचन्द्रनिभानना ।
कृपाकरा खड्गहस्ता  छिन्नहस्ता चिदम्बरा ॥

चामुण्डी चण्डिकानन्ता रत्नाभरणभूषिता ।
विशालाक्षी च कामाक्षी मीनाक्षी मोक्षदायिनी ॥

सावित्री चैव सौमित्री सुधा सद्भक्तरक्षिणी ।
शान्तिश्च शान्त्यतीता च शान्तातीततरा तथा ॥

जमदग्नितमोहन्त्री धर्मार्थकाममोक्षदा ।
कामदा कामजननी मातृका सूर्यकान्तिनी ॥

मन्त्रसिद्धिर्महातेजा मातृमण्डलवल्लभा ।
लोकप्रिया रेणुतनया भवानी रौद्ररूपिणी ॥

तुष्टिदा पुष्टिदा चैव शाम्भवी सर्वमङ्गला ।
एतदष्टोत्तरशत नामस्तोत्रं पठेत् सदा ॥

सर्वं सम्पत्करं दिव्यं सर्वाभीष्टफलप्रदम् ।
अष्टसिद्धियुतं चैव सर्वपापनिवारणम् ॥

दिग्बन्धन शान्तिमन्त्राः
इन्द्रादि दिग्पालकाः स्वस्थस्थानेषु स्थिरी भवन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ।

इति श्री शाण्डिल्यमहर्षिविरचिता
श्रीरेणुकादेव्यष्टोत्तरशतनामावलिः सम्पूर्णा ।